॥ देवीमाहात्म्यस्तोत्रम् अथवा दुर्गास्तोत्रम् ॥

लक्ष्मीशे योगनिद्रां प्रभजति भुजगाधीशतल्पे सदर्पौ
उत्पन्नौ दानवौ तच्छ्रवणमलमयाङ्गौ मधुं कैटभं च ।
दृष्ट्वा भीतस्य धातुः स्तुतिभिरभिनुतां आशु तौ नाशयन्तीं
दुर्गां देवीं प्रपद्ये शरणमहमशेषापदुन्मूलनाय ॥ १॥

युद्धे निर्जित्य दैत्यस्त्रिभुवनमखिलं यस्तदीयेषु धिष्ण्ये-
ष्वास्थाय स्वान् विधेयान् स्वयमगमदसौ शक्रतां विक्रमेण ।
तं सामात्याप्तमित्रं महिषमपि निहत्यास्य मूर्धाधिरूढां दुर्गां ॥ २॥

विश्वोत्पत्ति-प्रणाश-स्थिति-विहृति-परे देवि घोरामरारि-
त्रासात् त्रातं कुलं नः पुनरपि च महासङ्कटेष्वीदृशेषु।
आविर्भूयाः पुरस्तादिति चरण-नमत्-सर्व-गीर्वाण-वर्गां दुर्गां ॥ ३॥

हन्तुं शुम्भं निशुम्भं त्रिदश-गण-नुतां हेमडोलां हिमाद्रौ
आरूढां व्यूढदर्पान् युधि निहतवतीं धूम्रदृक्-चण्ड-मुण्डान् ।
चामुण्डाख्यां दधानां उपशमित-महा-रक्तबीजोपसर्गां दुर्गां ॥ ४॥

ब्रह्मेश-स्कन्द-नारायण-किटि-नरसिंहेन्द्र-शक्तीः स्वभृत्याः
कृत्वा हत्वा निशुम्भं जित-विबुध-गणं त्रासिताशेषलोकम् ।
एकीभूयाथ शुम्भं रणशिरसि निहत्यास्थितां आत्तखड्गां दुर्गां ॥ ५॥

उत्पन्ना नन्दजेति स्वयमवनितले शुम्भमन्यं निशुम्भं
भ्रामर्याख्यारुणाख्यं पुनरपि जननी दुर्गमाख्यं निहन्तुम् ।
भीमा शाकम्भरीति त्रुटित-रिपुभटां रक्तदन्तेति जातां दुर्गां ॥ ६॥

त्रैगुण्यानां गुणानां अनुसरण-कला-केलि-नानावतारैः
त्रैलोक्य-त्राण-शीलां दनुज-कुल-वनी-वह्नि-लीलां सलीलाम् ।
देवीं सच्चिन्मयीं तां वितरित-विनमत्-सत्रिवर्गापवर्गां दुर्गां ॥ ७॥

सिंहारूढां त्रिनेत्रां करतल-विलसच्छङ्ख-चक्रासि-रम्यां
भक्ताभीष्टप्रदात्रीं रिपुमथनकरीं सर्वलोकैकवन्द्याम् ।
सर्वालङ्कारयुक्तां शशियुतमकुटां श्यामलाङ्गीं कृशाङ्गीं दुर्गां ॥ ८॥

त्रायस्व स्वामिनीति त्रिभुवनजननि प्रार्थना त्वय्यपार्था
पाल्यन्तेऽभ्यर्थनायां भगवति शिशवः किन्त्वनन्या जनन्याः ।
तत्तुभ्यं स्यान्नमस्येत्यवनत-विबुधाह्लादि-वीक्षा-विसर्गां दुर्गां ॥ ९॥

एतं सन्तः पठन्तु स्तवमखिल-विपज्जालतूलानलाभं
हृन्मोहध्वान्त-भानु-प्रथितमखिल-सङ्कल्प-कल्पद्रु-कल्पम् ।
दौर्गं दौर्गत्य-घोरातप-तुहिनकर-प्रख्यमंहो-गजेन्द्र-
श्रेणी-पञ्चास्य-देश्यं विपुलभयद-कालाहि-तार्क्ष्य-प्रभावम् ॥ १०॥

दुर्गां देवीं शरणमहम् प्रपद्ये ॥